**अज्ञानम्**

अज्ञानमविद्यावासना। (अ० क०, पृ० 188)

**अथ**

अथेति अकारेणात्र नैरात्म्यप्रतिपादकत्वेन सर्वाकारवरोपेता शून्यता प्रोक्ता। थकारेणाप्यक्षोभ्यस्वभावप्रतिपादनेन निरालम्बकरुणा। ............तयोरद्वैधाद् मणिवरटकान्तःस्थितसहजानन्दशुक्रमेव शब्दाभिधेयमथेत्युच्यते। (अ० क०, पृ० 178)

**अद्वयम्**

अद्वयं शून्यताकरुणाभिन्नप्रज्ञोपायाद्वयं समाधिसम्भूतं महासुखस्वरूपं मन्त्रनीतौ। पारमितानये तु आत्मात्मीयग्राह्यग्राहकादिसकलमनोविस्पन्दरहितं सर्वधर्मनैरात्म्यस्वरूपस्वाभाविककायात्मकचित्तम्। (अ० क०, पृ० 200)

**अद्वयवादी**

अद्वयः सुखशुक्राद्वैधरूपः, तद्रूपप्रकाशनादद्वयवादी। (अ० क०, पृ० 236)

**अनक्षरः**

अच्युतकरुणारसपूर्णत्वादनक्षरः। (अ० क०, पृ० 262)

अविद्यमानवाच्यवाचकसम्बन्धेन धर्मधातुपरमाक्षरयोगात्मा अनक्षरः। (अ० क०, पृ० 313)

परमार्थरूपत्वादनक्षरः। (अ० क०, पृ० 314)

**अनङ्गकायः**

चूडामणिचक्रगतत्वेनानङ्गकायो धर्मधातुर्वज्रानङ्गः। (अ० क०, पृ० 312)

**अनागामी**

अनागामी क्लेशावशादसंसारित्वात्। (अ० क०, पृ० 239)

**अनादिनिधनः**

धर्मधातुज्ञानरूपत्वेन न विद्येते आदिनिधने उत्पादनिरोधौ विरमच्युतिक्षणौ यस्य स तथा। (अ० क०, पृ० 287)

**अनादिः**

अनादिराद्युत्पन्नो निष्प्रपञ्चः सर्वासत्संकल्पवर्जितः। (अ० क०, पृ० 235)

**अनुत्तरः**

चतुर्थाभिसम्बोधिरूपत्वादनुत्तरः। (अ० क०, पृ० 313)

**अनुस्मृतिः**

अनुस्मृतिर्नाम स्वेष्टदेवतादर्शनं प्रतिबिम्बाकारं विकल्परहितं तस्मादनेकरश्मिस्फुरद्रूपाकारं प्रभामण्डलम्। ततोऽनेकाकारस्फुरद्रूपां(पं) त्रैधातुकं स्म(स्फ)रणमित्यनुस्मृत्यङ्गमुच्यते।

(डाकिनीजालसंवररहस्य, पृ० 6)

**अपराजितः**

सर्वकायवाक्चित्तैक्येनाच्युतबोधिचित्तत्वेन परैर्विकल्पोर्मिभिर्न जीयत इत्यपराजितः।

(अ० क०, पृ० 288)

**अप्रतिष्ठितनिर्वाणम्**

विरमानन्दः संसारत्वात् प्रतिष्ठितः। मण्यग्रात् पतनान्निर्वाणम्, तद्भावान्न विद्यते प्रतिष्ठितं च निर्वाणं च यस्य स तथा। (अ० क०, पृ० 263)

**अभवोद्भवः**

शून्यतासम्भूतचतुःकायत्वादभवोद्भवः। (अ० क०, पृ० 330)

**अभिषेकः**

कुम्भो गुह्याभिषेकश्च प्रज्ञाज्ञानाभिधानकः।
पुनरेव महाप्रज्ञा तस्या ज्ञानाभिधानकः॥

कुम्भशब्देन स्तनौ उच्येते। तयोः स्पर्शनाद् यत् क्षरं क्षरसुखम्, स कलशाभिषेकः। गुह्यवज्रप्रवेशाद् यत् क्षरसुखं स गुह्याभिषेकः। पद्मे वज्रस्फारणाद् यत् क्षरसुखं स प्रज्ञाभिषेकः। महामुद्रानुरागेण यदक्षरं सुखं चतुर्थं तत्पुनस्तथाभिषेकः संवरसिद्धये सन्ध्याभाषया चोक्तो भगवता। (डा० जा० सं० र०, पृ० 1)

**अभिसमयः**

अभिसमयः प्रभास्वरनिराभासज्ञानसाक्षात्कारः। (अ० क०, पृ० 331)

**अमरेन्द्रः**

नैरात्म्ये ऐरावतगर्तित्वेन पुरन्दरस्वभावत्वादमरेन्द्रः। (अ० क०, पृ० 318)

**अमिताभः**

प्रज्ञाज्ञानमेव मूर्तिः शरीरं यस्य स हृदि स्थितोऽमिताभः। (अ० क०, पृ० 205)

**अमोघगतिः**

अमोघाऽव्याहता गतिर्यस्य सोऽमोघगतिः। निरन्तराव्याहतमहासुखशुक्रगत्यागतिस्वरूप इत्यर्थः। (अ० क०, पृ० 237)

**अमोघपाशः**

अमोघोऽवन्ध्यः पाश इव पाशः षडङ्गयोगलक्षणे यस्य स तथा, बोधिचित्तवज्रविनेयानां सत्त्वानां बिम्बदर्शनेन तथताप्रतिभासकत्वात् । (अ० क०, पृ० 252)

**अमोघसिद्धिः**

वाचा(चां) स्वरव्यञ्जनात्मिकानामीश्वरोऽनाहतस्वभावोऽमोघसिद्धिरूर्णाचक्रवर्ती ।

(अ० क०, पृ० 205)

**अमोघः**

अमोघमवन्ध्यमव्याहतसुखं जगदर्थम् । (अ० क०, पृ० 331)

अमोघोऽवन्ध्यः । (अ० क०, पृ० 252)

**अर्हन्**

सम्यक्समाधिवशात् सकलविकल्पक्लेशानरीन् हतवान् (इत्यर्हन्) । (अ० क०, पृ० 240)

**अविद्या**

अविद्या संसारवासना । (अ० क०, पृ० 267)

**आगमः**

महासुखत्वेनागमादागमः । (अ० क०, पृ० 331)

**आत्मवित्**

सर्वप्रपञ्चातिक्रान्तत्वेन गगनरूपत्वाद् आत्मवित् । (अ० क०, पृ० 321)

**आत्मा**

आत्मा निरालम्बस्वभावमचित्तचित्तम् । (अ० क०, पृ० 235)

**आदिबुद्धः**

सांक्लेशिकवैयवदानिकधर्माणां परमार्थतोऽभावेनाकारो निषेधार्थः । तेनादिबुद्धः । एकक्षण-पञ्चाकार-विंशत्याकार-मायाजालाभिसम्बोधिलक्षणं सुखम् आदिबुद्ध इत्यर्थः ।

(अ० क०, पृ० 287)

**आनन्दः**

निर्विकल्पमहासौख्य आकाङ्क्षालक्षणार्थकः ।
आनन्दोऽसौ सुखागारद्वारदेहलिकोपमः ॥
अहो सौख्यं महासौख्यं अहो भुञ्जे कथं कथम् ।
इत्याकाङ्क्षापरं चित्तं स आनन्दोऽग्रणीरिव ॥ (अ० क०, पृ० 210)

**आनन्दचतुष्टयम्**

भगवता एकस्मिन्नेव वज्रदेहे एकत्रैवानन्दे आनन्दाश्चत्वार उपदर्शिताः। तत्र कायानन्द-वागानन्द-चित्तानन्द-ज्ञानानन्दभेदेनेति। (डा० जा० सं० र०, पृ० 2)

अ इ उ इति त्रयं कायवाक्चित्ताद्वयत्वेन आनन्दः। आ ई ऊ इति द्विरूपतया परमानन्दः। ए ओ अं इति त्रयं उभयस्वरात्मकं त्रिवज्रं विरमानन्दः। ऐ औ अः इति त्रयं वज्राभिन्नं चतुर्थः सहजानन्दः। एतेन चतुरानन्दस्वभावो भगवाननुत्पादरूपो व्याख्यातः।

(अ० क०, पृ० 204)

**आवरणम्**

तथा चोक्तमार्यवसुबन्धुपादैः—

"............त्रीण्यावरणानि—कुशलानुत्पादः, अपरिपूर्णसम्भारता, अमनसिकारता च। तथा सद्धर्मं अगोचरम्, लाभसत्कारपूजायां गौरवम्, सर्वेषु अकारुण्यं चेति"।

पुनश्चोक्तम्—"अप्रतिष्ठितनिर्वाणमप्यावरणं बोधिसत्त्वगोत्राणाम्" इति। तथा मोक्षाभिलाशो-(षो)ऽपि बोधिसत्त्वानामावरणमिति विस्तरः। (डा० जा० सं० र०, पृ० 8)

**उपेक्षा**

उपेक्षा इत्यशेषकल्पनाकलङ्कापगमनात्। (डा० जा० सं० र०, पृ० 1)

**एकक्षणः**

एकोऽद्वितीयः क्षणस्तुर्यातीतश्चतुरानन्दैकमूर्तिः सहजसम्बोधिलक्षणः। (अ० क०, पृ० 297)

**कङ्कालः**

कं सुखं कलयतीति कङ्कालः। (अ० क०, पृ० 255)

**कमलम्**

कमलं रजःशुक्रयोगेन सितरक्तगुणयुतं स्त्रीपद्मम्। (अ० क०, पृ० 184)

**करुणा**

गुह्ये वज्रप्रवेशात् ततः समधिकतया करुणा। (डा० जा० सं० र०, पृ० 1)

**कामः**

कामो महारागः। स एव वज्रसत्त्वो महासत्त्वः परमाक्षरसुख इति।

(डा० जा० सं० र०, पृ० 4)

**कायः**

यत्कायं सर्वबुद्धानां निराभासं निरञ्जनम्।
अज्ञातमकृतं शुद्धमभावादिविवर्जितम्॥ (अ० क०, पृ० 205)

**कुलत्रयम्**

कुलत्रयमिति कायवाक्चित्तचक्रम्, तेन नाभिचक्रे स्थितो वज्ररूपस्वभावो वैरोचनः। कर्णिकानाडीगतः पिता कायस्य बीजबिन्दुः। (अ० क०, पृ० 197)

कुलत्रयं कायवाक्चित्तानन्दपरमानन्दविरमानन्दरूपं यस्य स तथा। (अ० क०, पृ० 313)

**कुलम्**

कुलमद्वयत्वात्। (अ० क०, पृ० 197)

**कुलिशेशः**

कुलिशे वज्ररन्ध्रद्वयाभ्यन्तरे ओडियाने जालन्धरसंज्ञके महासुखस्वभावेन ईश्वरत्वात्। (अ० क०, पृ० 255)

**कुलिशेश्वरः**

कुलिशे वज्रशिखरपुरे स्थिरत्वेन ईश्वरत्वात् कुलिशेश्वरः। (अ० क०, पृ० 184)

**कैवल्यज्ञानम्**

कैवल्यज्ञानं शुद्धाद्वयधर्मतालक्षणं धर्मकायात्मकम्। (अ० क०, पृ० 242)

**क्रोधराट्**

क्रोधराट् विरमानन्दादनन्तरं राजत इति क्रोधराट्, महासुखस्वभावो मञ्जुश्रीरूपः। (अ० क०, पृ० 254)

**क्रोधः**

क्रोधेन सर्वधर्मशून्यतास्फुटीभावेन, क्रोधे विरमपर्यन्ते वा, "क्रोधो विरमपर्यन्तः" इति पीठविवृतिः। (अ० क०, पृ० 187)

**क्लेशधातुः ( अष्टादश )**

क्लेशधातवोऽष्टादश अस्थि-चर्म-मांस-रक्त-स्नायु-मज्जा-मेदः-शुक्र-श्लेष्म-विट्-मूत्र-खेट-सिहा-(घा)ण-यकृत्-प्लीहा-पिशित-मल-रोमाख्याः। (अ० क०, पृ० 310)

**क्लेशः**

क्लेशः च्युतिदुःखम्। (अ० क०, पृ० 188)

**क्षितिगर्भः**

क्षितिशब्देन पञ्चभूतोपलक्षणात् क्षितिगर्भो हेतुः, क्षितिगर्भः सहजानन्दबिन्दुः। (अ० क०, पृ० 296)

**क्षीणास्रवः**

बोधिचित्तप्रयोगेण तदुत्पादितदृष्टान्तदार्ष्टान्तिकावाच्यतत्त्वसुखत्वेन सकलपरिसमाप्तार्थत्वात् सद्गुरूपदेशवशेन चतुर्थाभिषेकक्षणे तुर्यक्षणातीतत्वेन शिष्यस्य तत्क्षणात् एवातीवश्रद्धायोगेन सकलविद्याप्रहाणात् क्षीणा आस्रवा यस्य यतो वा स तथा। (अ० क०, पृ० 240)

**क्षेत्रम्**

परिशुद्धनाडीचक्रात्मकत्वात् क्षेत्रम्। (अ० क०, पृ० 3 ·2)

**गगनोद्भवः**

स्वयम्भूरूपत्वाद् गगनोद्भवः। (अ० क०, पृ० 330)

**गणपतिः**

गणो मायोपमार्थरूपः, तथागतविद्याप्रभृतयो वा, तेषां पतिर्गणपतिः स्वामी, बोधिचित्त-स्वभावत्वात्। (अ० क०, पृ० 238)

**गणाचार्यः**

गणानामानन्दपरमानन्दविरमानन्दानां आचार्यः सहजरूपोपदर्शकः। (अ० क०, पृ० 238)

**गणेशः**

गणानां पञ्चस्कन्धादीनां सहजरूपताऽऽपादनेन परमेश्वरत्वाद् गणेशः। (अ० क०, पृ० 238)

**गीष्पतिः**

गीर्ध्वनिः षडक्षरात्मक एकार आधारात्मकः, तस्य पतिः षष्ठो वंकारो वज्रधर आधेय-स्वभावः। तथा च वक्ष्यति—

पञ्चाक्षरो महाशून्यो बिन्दुशून्यः षडक्षर इति।

एकार-वंकाररूप इत्यर्थः। (अ० क०, पृ० 189)

**गुह्यधृक्**

गुह्यं परमाक्षरचतुर्थबिन्दुः, तद्धरतीति यथा। (अ० क०, पृ० 192)

**गुह्यराट्**

गुह्यं श्रावक-प्रत्येकबुद्धयानयोरुत्तरं वज्रयानं कायवाक्चित्तज्ञानैकलोलीभावो वा, तत्र महासुखरूपतया राजत इति गुह्यराट्। पञ्चगुह्यराजत्वाद् वा गुह्यराट्।

(अ० क०, पृ० 183)

**गुह्येन्द्रः**

गुह्येन्द्रः कायवाक्चित्तैश्वर्यलाभी। (अ० क०, पृ० 192)

**गौतमः**

परमाक्षरसुखत्वादेव गौतमः शाक्यमुनिः सिद्धार्थः। (अ० क०, पृ०, 283)

**चक्रवर्ती**

महासुखशुक्ररूपतया षट्चक्रेषु वर्तितुं शीलमस्य स चक्रवर्ती। (अ० क०, पृ० 238)

**चतुर्मुद्रा**

कर्ममुद्रा-महामुद्रा-ज्ञानमुद्रा-समयमुद्रा..........उक्तं च चतुर्मुद्रोपदेशे तद्यथा—

कर्मज्ञानमहामुद्रासमयाख्यः प्रभास्वरः।
हेतुर्भाव्या तथा प्राप्य चतुर्थोऽविनश्वरः॥

हेतुरिति प्रथमं कर्ममुद्रोद्भूतं यत्सहजमच्युतसुखम्। उक्तं च भगवता—तत्सत्यमेव, किन्तु संवृत्या लौकिकदृष्टान्तेनादर्शमिव न परमार्थतः। तस्मात्तीक्ष्णेन्द्रियेण न ग्राह्या कर्ममुद्रा। कर्ममुद्रा च स्तनकेशवती कामधातुसुखस्य हेतुः। कर्म चुम्बनालिङ्गनगुह्यस्पर्शवज्रस्फालनादि-व्यापारात्मकम्, तेनोपलक्षिता मुद्रा प्रत्ययकारिणी। प्रत्ययोऽत्र क्षरसुखलक्षणः। मुदं सुखविशेषं राति ददातीति मुद्रा भाव्या। ज्ञानमुद्रा, सा च स्वचित्तपरिकल्पिता विश्वमात्र-(ता) देवीस्वभावा पूर्वानुभूता रूपधातुसुखस्य हेतुः। ज्ञानं पूर्वहसितरमितादिभावनालक्षणम्, ऽत्ययोऽत्र स्पन्दसुखलक्षणः। स्कन्धधात्वायतनादिदेवताकारेण विशोध्य मण्डलचक्रस्वभावं यथा विधिना स्फुटीकृत्य मन्थमन्थानयोगेन ज्ञानवह्निं प्रज्वाल्य यावद् दग्धेऽहं स्रवते शशी ललाटकण्ठहृन्नाभिवज्रकमलकर्णिकाग्रतः। बोधिचित्तरूपेण विषयेन्द्रियसमस्तमहासुखसाग-रस्य यदेकलोलीभूततन्मयसमाधिमापन्नो भूत्वा तिष्ठेत्, यावत् श्रीमहामुद्राऽभिमुखी भवतीति प्राप्या। महामुद्रा स्वप्नेन्द्रजालमनोमयसदृशी। महती चासौ (मुद्रा) महामुद्रा चेति कृत्वा। महत्त्वं पुनरस्याः सर्वाकारवरोपेतत्वं न प्रादेशिकत्वम्, मुद्र्यतेऽनेनेति बोधिचित्तवज्रेण मुद्रा। प्रत्ययोऽत्र स्वचित्तपरिकल्पनाधर्मरहितो धूमादिनिमित्तपूर्वकः स्वचित्तप्रतिभासो योगिगम्यः प्रतिसेनावदिति। तामालिङ्ग्य यावत्समयमुद्रा साक्षात् क्रियते। अविनश्वरा परमाक्षर-स्वरूपिणी सा च फलरूपमहामुद्रा।

मुदं परमाक्षरसुखलक्षणं राति सर्वकालमादत्ते पूर्णावस्थायामचलयोगेनेति मुद्रा।.............. कायवाक्चित्तज्ञानविशुद्ध्या मुद्राचतुष्टयमुक्तम्। श्री आदिबुद्धे चोक्तम्—

क्षरः क्षरः (क्षरोऽक्षरः) ततः स्पन्दो निस्पन्दो विमलोऽपरः।

[1]अब्जे वज्रप्रवेशः शिखिनि च मरुतो बिन्दुपातस्तृतीयः,
एतद्योगत्रयस्य प्रकटितनियता कायवाक्चित्तमुद्रा।
रागारागान्तकाद्या परमसुखनिधिर्योगगम्या चतुर्थी
मुद्राणां सैव माता भवति सुफलदा श्रीगुरोर्वक्त्रमेषा।

उक्तं च वैरोचनाभिसम्बोधितन्त्रे—

कर्ममुद्रां समासाद्य धर्ममुद्रां विभावयेत्।
तत्र (अत) ऊर्ध्वे महामुद्रा तस्याः समयसम्भवः॥

अन्यत्र च—

तां मोक्षलक्ष्मीमविनष्टसौख्यीं(ख्यां) त्यक्त्वा शुभां भगवतीं युवतिं रमन्ते।
प्रायेण पूर्वार्जितमुग्रकर्म येनामृतं त्यज्य विषं पिबन्तीति॥

श्री आदिबुद्धे च—

[2]एता मुद्राश्चतस्रोऽक्षरसुखफलदा योगिना भावनीयाः,
सर्वस्मिन् सर्वकालं सुरतरतिगतैर्लोकमार्गप्रयुक्तैः।
ग्रामारण्येऽथ श्मशानेऽशुचिशुचिनिलये वेश्मदेवालये च,
वर्णावर्णाभियुक्तैस्तनुबलसुखदैरन्नपानादियुक्तैः ॥

(अ० क०, पृ० 322-326)

**चतुःस्मृतिसमाधिराट्**

हसितेक्षणपाण्यावाप्तिद्वन्द्वचतुःसमाधिराजनाच्चतुःस्मृतिसमाधिराट्। (अ० क०, पृ० 303)

**चत्वारि पीठानि**

चतुष्पीठे चोक्तम्—

"मन्त्रादात्मपीठम्, आत्मपीठात्परपीठम्, परपीठात्तत्त्वपीठम्"। (डा० जा० सं० र०, पृ० 4)

**चत्वारिंशत् क्षणाः**

रागो रक्तं तुष्टं मध्यमतुष्टमतितुष्टं हर्षणं प्रामोद्यं विस्मयो हसितमाह्लादनमालिङ्गनं चूषणं (स्थैर्यं) वीर्यं मानः करणं हरणं बलमुत्साहः साहसं मध्यमसाहसमुत्तमसाहसं रौद्रं विलासो वैरं शुभं वाक्स्फुटं सत्यम् असत्यं निश्चयो निरुपादनं दाहत्वं चोदनं शौर्यम् अलज्जा धूर्तत्वं दुष्टत्वं शठकौटिल्यमिति चत्वारिंशत् क्षणा उपायज्ञानस्य। (अ० क०, पृ० 310)

---

1. का० त०, 3.126
2. का० त०, 5.54

**चित्तवज्रम्**

द्विविधं चित्तवज्रं तु पिण्डचित्तं प्रकाशं चेति ।
पिण्डचित्तं कर्ममुद्राध्यानम्, प्रकाशं महामुद्रेति ॥ (डा० जा० सं० र०, पृ० 2)

**चित्तस्यैकाग्रता**

चित्तस्यैकाग्रता नाम बिम्बेन सह चित्तस्यैकीकरणमिति । (डा० जा० सं० र० पृ० 6)

**जगद्गुरुः**

जगतां श्वासवातानां कायवाक्चित्तानां वा गुरुस्तत्त्वोपदेष्टा । (अ० क०, पृ० 188)
सर्वप्रपञ्चोपशमेनाविचलितसुखज्ञानविहारत्वाज्जगद्गुरुः । (अ० क०, पृ० 319)

**जितारिः**

अविद्यादिद्वादशाङ्गनिरोधनाज्जितारिः । (अ० क०, पृ० 237)

**जितेन्द्रियः**

उष्णीषमणिशिखराश्रितत्वेन सर्वेन्द्रियविषयानभिभवनीयत्वाद् द्वीन्द्रियसंयोगानुत्पन्नत्वाद् वा । (अ० क०, पृ० 241)

**जिनजिक्**

जिनान् अक्षोभ्यादीन् जनयतीति नैरुक्त्या जिनजिग् विमलनिराभासचित्तावबोधरूप इत्यर्थः। (अ० क०, पृ० 294)

**जिनः**

रागविरागमध्यरागविजयित्वाज्जिनः । (अ० क०, पृ० 237)

**ज्ञानसंभवः**

तुर्यातीतास्तिनास्तिव्यतिक्रान्तस्वसंवेद्यत्वाद् ज्ञानसंभवः । (अ० क०, पृ० 330)

**तत्त्वः**

भावाभावैकरूपतत्वयोगात्तत्त्वः । (अ० क०, पृ० 303)

**तथता**

तथता वामदक्षिणवाहभङ्गेनावधूतीवाहः । उक्तं च--

नाडिकादिस्वभावेन देवतातत्त्वयोगतः ।
तासामेतत्परं शुद्धं स्वरूपं निःस्वभावता ॥
यत्प्रज्ञोपाययोरैक्यं सर्वाकारैकसंवरम् ।
सावधूती विधूतात्मा मध्यमा प्रतिपन्मता ॥
आदिमध्यान्तसंकल्पसम्बन्धानवधानतः ।
शुद्धः स्फटिकसंकाशः प्रकाशः सोऽवधूतिकः ॥ (अ० क०, पृ० 26 ।)

**तथतात्मा**

महासुखशुक्रलिप्ततया तथतात्मा । (अ० क०, पृ० 235)

**तथागतः**

तथा सहजसुखाकारेणोष्णीषकर्णिकातो वज्रमणिवरटके आगतं विवृत्या मणिवरटकात् पुनरुष्णीषचक्रगतं तथागतम् । उक्तं च—

आगतश्च गतश्चैव व्याप्य विश्वं व्यवस्थितः ।
गत्यागतिनिरोधाश्च(च्च) तथागत इति स्मृतः ॥ (अ० क०, पृ० 187)

तथा तथता कर्मादिमुद्रा, तत्र गतमानन्दादिसुखज्ञानं यस्य स तथागतः ।

(अ० क०, पृ० 288)

तथता धर्मादया अवधूती, तद्‌गतत्वेन सर्वगुणोदयाद्दशविधप्राणादिवायुनिरोधेन दशभूमिसमन्तप्रभापर्यन्तफलभूमिप्राप्तस्तथागतः ।

यथैवागतो वज्रमणिवरटकम्, तथैव उष्णीषचक्रं गतस्तथागतः । (अ० क०, पृ० 237)

**त्रयस्त्रिंशत् क्षणाः**

प्रकृतयो विरागो मध्यविरागोऽतिविरागो यन्मनोगतागतम् । शोको मध्यशोकोऽतिशोकः । सौम्यविकल्पो भीतं मध्यमभीतमतिभीतम् । तृष्णा मध्यतृष्णा अतितृष्णा उपादानं निःशुभ्रं क्षुत्तृष्णावेदना समवेदना अतिवेदना । विदविद् धारणापदं प्रत्यवेक्षणं लज्जा कारुण्यं स्नेहो मध्यस्नेहोऽतिस्नेहश्चकितं सञ्चयो मात्सर्यमिति त्रयस्त्रिंशत् क्षणाः प्रज्ञाज्ञानस्य ।

**त्रिकायधृक्**

सहजान्तर्वर्तिकायवाक्चित्तत्वात् त्रिकायधृक् । (अ० क०, पृ० 247)

**त्रिलोकम्**

त्रयोलोकास्त्रिलोकम्, कायवाक्चित्तम् । (अ० क०, पृ० 182)

त्रिलोकं कायवाक्चित्तलक्षणम् । (अ० क०, पृ० 195)

त्रैलोक्यं कायत्रयम् । (अ० क०, पृ० 264)

**त्रैविद्यः**

तिस्रो विद्याः कामावचररूपावचरमहामुद्रासिद्धिसाधिका यस्य स एव त्रैविद्यः ।

(अ० क०, पृ० 320)

**दर्पः**

अतिमानो दर्पः । (अ० क०, पृ० 333)

**दर्शनम्**

दर्शनमिति चुम्बनमालिङ्गनम् । (डा० जा० सं० र०, पृ० 2)

**दशकामावस्थाः**

दशकामावस्थाश्च दशधूमादिनिमित्तानि प्रत्याहाराङ्गरूपाणि । तथा चोक्तं श्रीकालचक्रे[1]—

चिन्ताकाङ्क्षाज्वरोऽङ्गे वरमुखकमले शुष्किरन्या प्रवृत्तिः,
कम्पोन्मादश्च घूर्मा प्रभवति मनसो विभ्रमस्तीव्रमूर्च्छा ।
धूमाद्या वज्रिणस्ता प्रकटदशविधाः प्राणिनोऽङ्गेष्ववस्था,
लोके ता मन्मथस्य प्रकटितनियताः को जिनः कश्च कामः ॥

(अ० क०, पृ० 217)

**दशधातवः**

वायुश्चित्तं बोधिचित्तं रक्तं मज्जा अस्थीनि स्नायुर्मांसमिन्द्रियाणि चर्म चेति ।

(अ० क०, पृ० 224)

**दशबलबलिता**

दशविधधूमादिनिमित्तबलयोगाद् दशबलबलिता । (अ० क०, पृ० 331)

**दशभूमीश्वरः**

दशानां भूमीनां प्रमुदितादीनां चतुर्विंशतिपीठोपपीठादिलक्षणानामीश्वरः प्रधानं सहजज्ञानाकारेण व्यापकत्वात् । अस्यायमर्थः—

दानात् प्रमुदितो योगी शीलवान् विमलो भवेत् ।
क्षान्त्या प्रभाकरी वीर्यादर्चिष्मान् पुण्यवानसौ ॥
ध्यानादभिमुखाकृष्टः प्रज्ञया तु सुदुर्जयः ।
दूरङ्गमो महोपायो बलवानचलो भवेत् ॥
साधु[श्च] प्रणिधानेन धर्ममेघस्तु ज्ञानवान् ।
जिनस्तथागतः प्रत्यात्मवेद्य एकादशो भवेत् ॥ (अ० क०, पृ० 222-223)

**दंष्ट्राकरालः**

दंष्ट्रा चण्डाली तस्या गुरूपदेशाज्ज्वलितायाः शिखरभूतत्वाद् दंष्ट्राकरालः ।

(अ० क०, पृ० 254)

**दानवाधिपः**

अनुपमाद्वयश्रीधर्मामृतलाभेन राहुस्वभावत्वाद् दानवाधिपः । (अ० क०, पृ० 318)

**देवातिदेवः**

महारागात्मककायत्वेन ब्रह्मात्मकत्वाद् देवातिदेवः । (अ० क०, पृ० 318)

---

1. का० त० ४।१२६

**देवेन्द्रः**

प्रभास्वरचित्तवज्रत्वेन विष्णुस्वभावत्वाद् देवेन्द्रः । (अ० क०, पृ० 318)

**द्वादशभूमयः**

ताश्च भूमयः समन्तप्रभा-अमितप्रभा-गगनप्रभा-वज्रप्रभा-रत्नप्रभा-पद्मप्रभा-कर्मप्रभा-अनुपमा-निरुपमा-प्रज्ञाप्रभा-सर्वज्ञता-प्रत्यात्मवेद्याख्याः । (अ० क०, पृ० 204)

**द्वादशाकारसत्यार्थः**

निःस्प(ष्य)न्दविपाकपुरुष(षा)कारवैमल्यक्षणानां प्रत्येकं त्रैगुण्याद् द्वादशाकाराद् द्वादशभूमयः संवृतिपरमार्थसत्याभेदेन तद्योगाद् द्वादशाकारसत्यार्थः । तत्र कायवाक्चित्तविवेकनिःस्प-(ष्य)न्दभेदेन प्रथमं त्रिकं निर्माणकायस्य । भास-प्रतिभास-प्रकृतिनिराभासविपाकभेदेन द्वितीयं त्रिकं संभोगकायस्य । चित्तचैतसिकाविद्यापुरुष(षा)कार(वैमल्यविपाक)भेदेन तृतीयं त्रिकं धर्मकायस्य । आनन्दद्वयविरमसहजानन्दवैमल्यभेदेन चतुर्थत्रिकं ज्ञानकायस्येति । प्राणक्षयेण रजोनिरोधाद्वा निरोधितमेषवृषादिद्वादशराशित्वेन वा द्वादशभूमिलाभाद् द्वादशा-कारसत्यार्थः । (अ० क०, पृ० 308)

**द्विपदोत्तमः**

संवृतिपरमार्थज्ञानद्वयेन द्विपदेनोत्तमः श्रेष्ठो द्विपदोत्तमः । अथवा द्विपदेन वज्रमणिशिखरो-ष्णीषाप्रतिष्ठाद्वयेन उत्तमो द्वादशभूमीश्वरः । यथोक्तं विमलप्रभायाम्—

एकं पदं वज्रमणौ रजोऽर्के उष्णीषशुक्रे शशिनि द्वितीयम् ।
न्यस्तं सदोच्छेद्यमभेद्यमिष्टं भर्तुस्त्रिलोकमहितं शिरसा प्रणम्य ॥

(अ० क०, पृ० 194)

**धर्मगण्डी**

सकलसुखमयवाग्वज्रसमाधिविस्फारितसर्वधर्मप्रकाशकधर्मज्योति(ती)रूपत्वाद् धर्मगण्डी ।
(अ० क०, पृ० 262)

**धर्मधातुः**

कायत्रयात्मकमहासुखैकरूपत्वाद् धर्मधातुः । (अ० क०, पृ० 244)

**धर्मयोनिः**

सर्वसत्त्वानामुत्पत्तिस्थानत्वाद् ज्ञानकायत्वाद् धर्मयोनिः । (अ० क०, पृ० 248)

**धर्मराट्**

धर्मो धर्मधातुः स्वाधिष्ठानम्, तत्र तेन वा राजत इति धर्मराट्, सहजज्ञानालोकरूपत्वात् ।
(अ० क०, पृ० 244)

**धर्मराजः**

धर्मेण महासुखवर्षेण लोकान् रञ्जयतीति धर्मराजः। (अ० क०, पृ० 244)

**धर्मेश्वरः**

धर्मेण सहजानन्दचतुष्टयेन ईश्वरस्त्रिलोकस्वामी, नित्यं बोधिचित्तरसास्वादनैश्वर्यात्।
(अ० क०, पृ० 244)

**धातुः**

सर्वधर्मप्रकृतिकत्वाद्धातुः। (अ० क०, पृ० 244)

**धारणा**

धारणा नाम प्राणस्य माहेन्द्रवारुणाग्निवायुमण्डला(ले) नाभौ कृतिश्चैव (हृदि कण्ठे) ललाटे प्रवेशः। न बाह्यनिर्गमः। बिन्दौ प्राणप्रवेशनमिति धारणाङ्गमुच्यते। (डा० जा०सं०र०, पृ० 6)

**ध्यानम्**

चतुरानन्दैकत्वाद् ध्यानम्। (अ० क०, पृ० 246)

प्रज्ञादिपञ्चविधध्यानरूपत्वाद् ध्यानम्। (अ० क०, पृ० 332)

ध्यानं नाम शून्येषु सर्वभावेषु चित्तप्रवृत्तिः (डा० जा० सं० र०, पृ० 5)

**नाथः**

नाथमच्युतबोधिचित्तम्। (अ० क०, पृ० 187)

नाथः समाध्यनुगमात्। सकलसत्त्वानामनाभोगेनाधिष्ठानात्। (अ० क०, पृ० 224)

अद्वययोगेन सुस्थितत्वान्नाथः। (अ० क०, पृ० 266)

**नामसंगीतिः**

नानातन्त्रोपलक्षितमहासुखाकारसहजानन्दसुखस्य नाम्ना सम्यग्ज्ञानं(गानं) नामसंगीतिः।
(अ० क०, पृ० 190)

**निराकारः**

कल्पनापोढाभ्रान्तप्रत्यक्षदर्शनान्निराकारः परमाणुधर्मतातीतः कल्पनारहितत्वात् पिहितापिहितनेत्रगम्यः। (अ० क०, पृ० 316)

**निराभोगः**

अनाभोगेन पञ्चकामोपभोगसुखत्वान्निर्गत आभोगो विकल्पप्रवृत्तिरस्य स तथा।

उक्तं च—

"पूर्णप्रणिधानाहितसततानाभोगवाहि परकार्यम्" इति। (अ० क०, पृ० 287)

**निर्माणकायः**

अनाभोगबहिर्जगदर्थनानाप्रकृतिको निर्माणकायः। (अ० क०, पृ० 318)

**निर्वाणम्**

भावाभावपरामर्शशून्यत्वान्निर्वाणम् । (अ॰ क॰, पृ॰ 285)

**निर्विकल्पः**

परमार्थज्ञानविकल्पस्याप्यभावान्निर्विकल्पः । उक्तं च—

[1]परमार्थविकल्पेऽपि नावलीयेत पण्डितः ।
को हि भेदो विकल्पस्य शुभे वाप्यशुभेऽपि वा ॥ (अ॰ क॰, पृ॰ 287)

**नैरात्म्यम्**

नैरात्म्यं सर्वधर्माणां निराभासलक्षणं विश्वबिम्बरूपम् । (अ॰ क॰, पृ॰ 237)

**पञ्चकायात्मकः**

जाग्रत्-स्वप्न-सुषुप्त(प्ति)-तुरीय-तुरीयातीतत्वेन पञ्चकायात्मकः । (अ॰ क॰, पृ॰ 247)

**पञ्चचक्षुः**

प्रत्याहारध्यानप्राणायामधारणानुस्मृत्यङ्गस्फुटीभावात् पञ्चचक्षुः । (अ॰ क॰, पृ॰ 248)

**पञ्चज्ञानात्मकः**

पञ्चकुलात्मकत्वेन आदर्शादिज्ञानात्मकत्वात् पञ्चज्ञानात्मकः । उक्तं च—

[1]बोलककोलयोगेन स्पर्शात् काठिन्यवासना ।
कठिनस्य मोहधर्मत्वाद् मोहो वैरोचनो मतः ॥
बोधिचित्तं द्रवं यस्माद् द्रवमब्धातुकं मतम् ।
अपामक्षोभ्यरूपत्वाद् द्वेषोऽक्षोभ्यनायकः ॥
द्वयोर्घर्षणसंयोगात् तेजः संजायते सदा ।
रागोऽमितवज्रः स्याद् रागस्तेजःसमुद्भवः ॥
कक्कोलहेतु यच्चित्तं तत् समीरणरूपकम् ।
ईर्ष्या अमोघसिद्धिः स्यादमोघो वायुसम्भवः ॥
सुखं रागं भवेद् रक्तं रक्तिराकाशलक्षणा ।
आकाशं पिशुनवज्रः स्यात् पिशुनमाकाशसम्भवः ॥ इति ।

अथवा मातापितृसंयोगे विपतुर्बोधिचित्तबीजेन चन्द्राक्षोभ्यद्रवत्वादर्शरूपता । मातुः स्वयम्भू-कुसुमेन सूर्यरत्नसम्भवरागत्वात् समता । पद्मे वज्रप्रवेशेन महारागबीजेनामिताभसुखत्वात्

---

1. आ॰ मा॰, पृ॰ 6
2. हे॰ त॰, 2. 2. 53-57.

प्रत्यवेक्षणा। चलनस्पन्दनानुभवामोघसिद्धिरूपत्वात् कृत्यानुष्ठानम्। अन्तराभवविज्ञानप्रवेशेन वर्धनम्, ततो वैरोचनो जननीगर्भान्निष्क्रमणं बिम्बनिष्पत्तिः सुविशुद्धधर्मधातुः।

(अ० क०, पृ०, 248)

**पञ्चशिखा**

आलोकालोकाभासालोकोपलब्धिप्रभास्वरधर्मधातुलक्षणः(णा) पञ्चशिखा।

(अ० क०, पृ० 247-282)

**पञ्चाकारभावना**

मूलतन्त्रपञ्चाकारज्ञानस्तवे पञ्चश्लोकैः पञ्चाकारभावना भगवतोक्ता। तद्यथा—

शून्यो भावसमूहोऽयं कल्पनारूपवर्जितः।
दृश्यते प्रतिसेनेव कुमार्या दर्पणे यथा॥

लोकोत्तरसत्यरूपस्कन्धः, आदर्शज्ञानम्।

सर्वभावसमो भूत्वा एको भावोऽक्षरः स्थितः।
अक्षरज्ञानसंभूतो नोच्छेदो न च शाश्वतः॥

वेदनास्कन्धः, समताज्ञानम्।

सर्वसंज्ञात्मका वर्णा अकारकुलसम्भवाः।
महाक्षरपदप्राप्ता न संज्ञा न च संज्ञिनः॥

संज्ञास्कन्धः, प्रत्यवेक्षणाज्ञानम्।

अनुत्पन्नेषु धर्मेषु संस्काररहितेषु च।
न बोधिर्नैव बुद्धत्वं न सत्त्वो नैव जीवितम्॥

संस्कारस्कन्धः, कृत्यानुष्ठानज्ञानम्।

विज्ञानधर्मतातीता ज्ञानशुद्धा ह्यनाविलाः।
प्रकृतिप्रभास्वरा धर्माः धर्मधातुर्गतिं गताः॥

विज्ञानस्कन्धः, सुविशुद्धधर्मधातुज्ञानम्। (अ० क०, पृ 328-329)

**पञ्चाक्षरशून्यम्**

ज्ञानस्कन्धविज्ञानस्कन्धज्ञानधात्वाकाशमनःश्रोत्रशब्दधर्मधातुदिव्येन्द्रियभगमूत्रस्रावशुक्रच्युतिरूपाणां निरावरणता प्रत्येकं स्वस्वविषयग्रहणविवर्जितत्वं समरसमेकलोलीभूतत्वं परमाक्षरशून्यं योगिस्वसंवेद्यम्, न सर्वाभावलक्षणम्। तदेवाह—तमाकारशून्यं रेखामात्रमनुच्चार्यं कर्तृकाकारं मध्ये, संस्कारस्कन्धवायुधातुघ्राणस्पर्शवागिन्द्रियविट्स्रावाणामेकलोलीभूतत्वं मध्यानाहतचिह्नात् पूर्वेण इकारशून्यं दण्डाकारं द्वितीयाक्षरशून्यम्। वेदनास्कन्धतेजोधातु-

चक्षूरसपाणिगतीनां निरावरणगतं मध्यानाहतचिह्नाद्दक्षिणेन लृकारशून्यं बिन्दुद्वयं तृतीयाक्षरशून्यम् । संज्ञास्कन्धतोयधातुजिह्वारूपादेन्द्रियादीनां निरावरणता मध्यानाहतचिह्नाद्वामेन बिन्दुरूपमेकमनुच्चार्यमूकारशून्यं चतुर्थाक्षरमहाशून्यम् । रूपस्कन्धपृथिवीधातुकायेन्द्रियगन्धपाटवालापानां समरसत्वमेकलोलीभूतत्वं मध्यानाहतचिह्नात् पश्चिमेन तद् हलाकृतिरेकारशून्यं पञ्चाक्षरशून्यम् । (अ० क०, पृ० 314-315)

**पद्मनर्तेश्वरः**

अवाच्यसुखबोधिचित्तत्वात् पद्मनर्तेश्वरः । (अ० क०, पृ० 291)

**परमानन्दः**

परमानन्दः सांक्लेशिकसुखभोगलक्षणत्वाद् भवः संसारः । ...............

रागः परमानन्दः, आसक्तिलक्षणत्वात् । (अ० क०, पृ० 274)

भावेषु भावनारोपशून्यत्वेन विमर्दनात् ।
निःस्वभावत्वयोगात्मा परमानन्दरूपकम् ॥ (अ० क०, पृ० 211)

**परवित्**

स्वपरयोरद्वैतबोधात् परवित् । (अ० क०, पृ० 321)

**पारमिताश्चतस्रः**

उपाय-बल-प्रणिधि-ज्ञान-पारमिताश्चतस्रः । उक्तं च—"तस्याः सत्त्वार्थमृद्धिर्भवनिधनमजप्राप्तिरन्याश्चतस्रः" इति । अथ सत्त्वार्थमित्युपायः । ऋद्धिरिति प्रणिधिः । भवनिधनमिति बलम् । अजप्राप्तिरिति ज्ञानम् । (अ० क०, पृ० 216)

**पारमिताः ( दश )**

उदकादिपूर्वकलोकोत्तराद्यभिषेकदानाद्दानम् । कमलकुलिशसंयोगे बोधिचित्तरक्षणात् शीलम् । न क्वचित् स्थिताः सर्वधर्मा इति सर्वधर्मनिर्विकल्पावगमक्षमणात् क्षान्तिः । महास्फुटीभावोद्योगाद् वीर्यम् । चतुर्थध्याननिमज्जनाद्ध्यानम् । प्रज्ञा दिव्यमुद्रा गुरुमुखैकलभ्या । उपायो हठयोगोऽपि समाध्यङ्गस्फुटीभावार्थम् ।............समाध्यङ्गस्फुटीभावेन एकक्षणाभिसम्बोधिक्षणोदये सर्वं स्वपरार्थनिष्पत्तिः प्रणिधिः । बलं महासुखसामर्थ्यम् । ज्ञानं मणिवरटकान्तःप्रवृत्तिविवृत्या उष्णीषचक्रपर्यन्तं महासुखज्ञानम् । (अ० क०, पृ० 221-222)

**पीठानि**

परपीठेति प्रज्ञोक्ता आत्मपीठमुपायकम् ।
अनयोरद्वयीभावो योगपीठ इति स्मृतम् ॥
तत्त्वपीठं तदुत्पन्नं तद्रहितं च यद् भवेत् ।
सहजेति समाख्यातं वाक्पथातीतगोचरम् ॥

अन्यत्र च—

[1]पीठं स्त्रीगुह्यपद्मं प्रभवति समये वज्रमेवोपपीठं
क्षेत्रं छन्दोहमेलापकचितिभुवनं तद्वदेवं समस्तम् ।
पीठं वामाङ्गपूर्वं ह्यपरमपि तथा दक्षिणं चोपपीठम्
एवं क्षेत्रादि सर्वं करचरणगताश्चाङ्गुलीर्जानुसीम्नः ॥ इति ।

(अ० क०, पृ० 308)

**पुण्यम्**

पुण्यं महाकरुणारागरञ्जिताचित्तचित्तेन समाध्यङ्गाभिमुखीकरणं सुखं (पुण्यम्) । उक्तं च—

न विरागात् परं पापं न पुण्यं सुखतः परम् ।
तस्मात् सर्वप्रयत्नेन च्युतिसौख्यं विवर्जयेत् ॥

(अ० क०, पृ० 245)

**प्रजापतिः**

ज्ञानप्रबोधेन तुर्यातीतप्रभास्वरमयज्ञानबिम्बमयत्वेन सर्वजन्तूनामुत्पादनात् प्रजानां जन्तूनां पतिः प्रजापतिः । (अ० क०, पृ० 265)

**प्रज्ञा**

वैमल्यगतमहामुद्रा प्रज्ञा । (अ० क०, पृ० 319)

**प्रज्ञोपायः**

प्रज्ञा सर्वधर्माविकल्परूपा शून्यता । उक्तं चादिबुद्धे—

[2]त्यक्त्वेमां कर्ममुद्रां सकलुषहृदयां कल्पितां ज्ञानमुद्रां
सम्यक्सम्बोधिहेतोर्जिनवरजननीं भावयेद् दिव्यमुद्राम् ।
निर्लेपां निर्विकारां खसमहततमां व्यापिनीं योगगम्यां
कूटस्थां ज्ञानतेजां भवकलुषहरामादिबुद्धानुविद्धाम् ॥

इति सैव उपायः । (अ० क०, पृ० 186)

**प्रत्यात्मवेद्यः**

षष्ठो वज्रधरः कुमारीसुरतसुखवदनन्यवेद्यत्वात् प्रत्यात्मवेद्यः । उक्तं च—

वक्तुं न शक्यते सौख्यं कुमार्याः सुरतं विना ।
यौवने सुरतं प्राप्य स्वतो वेत्ति महासुखम् ॥
एवं न शक्यते वक्तुं समाधिरहितं सुखम् ।
समाधावक्षरं प्राप्ताः स्वतो विन्दन्ति योगिनः ॥ (अ० क०, पृ० 246)

---

1. का० त०, 3.166.
2. का० त० 4.199.

**प्रत्याहारः**

प्रत्याहारशब्देन त्रैधातुकबुद्धबिम्बदर्शनम्। कुण्डल्या सह योगतः। अत्रामृतकुण्डलीसंज्ञया सन्ध्याभाषान्ते वा स्वरित्युक्तो भगवता। (डा० जा० सं० र०, पृ० 5)

**प्रमथः**

महासुखशुक्रदान्तवशीकृतप्रादेशिकक्षणा(स्कन्धा)दिविघ्नगणत्वेन विघ्नाधिपत्वात् प्रमथः। (अ० क०, पृ० 319)

**प्रमथेश्वरः**

कायवाक्चित्तमुक्तिरूपत्र्यम्बकस्वभावत्वात् प्रमथेश्वरः। (अ० क०, पृ० 319)

**प्रह्वकायः**

प्रह्वकायः सहजनिमग्नकायवाक्चित्तः। ( अ० क०, पृ० 192 )

**प्राणायामः**

प्राणायामो नाम ललनावामदक्षिणमार्गनिरोधः। अयमेव वसन्तकालः। अवधूतीमध्यमार्गे प्राणवायोः समप्रवृत्तिरिति। तत्रानिलयोगेनावधूत्यां संचार इति। तस्य ॐकारेण उच्चा-(च्छ्वा)सः, आःकारेण निःश्वासः। ॐ हूँकारेण निरोधश्चन्द्ररविराहुस्वभावेन कुरुते योगी। इति प्राणायामाङ्गमुच्यते। ( डा० जा० सं० र०, पृ० 6 )

**प्रीतिः**

प्रीतिर्नाम सर्वभावेषु चित्तारोपणम्। ( डा० जा० सं० र०, पृ० 6 )

[ इसके आगे का अंश 'धी:' के अगले अंक में देखें ]

———

# चार बौद्ध कुलों की समयमुद्राएँ

—जनार्दन पाण्डेय—

[ 'धी:' के अङ्क 1, 3, 4, 7, 9, में विविध मुद्राओं के लक्षण भिन्न-भिन्न ग्रन्थों से दिये गये हैं। प्रथम अङ्क में बताया गया है कि प्रत्येक देवता की भिन्न-भिन्न आराधनाओं में समयमुद्राएँ भी भिन्न-भिन्न होती हैं। इस अङ्क में बौद्धों के चार प्रसिद्ध कुलों—तथागतकुल, वज्रसत्त्वकुल, पद्मकुल और मणिकुल की समयमुद्राओं के लक्षण सर्वतथागततत्त्वसंग्रह से दिये जा रहे हैं। ]

## तथागतकुल की समयमुद्राएँ

**रत्नवज्रा**

रत्नवज्रा समाङ्गुष्ठतर्जनीमुखसन्धनात्।
सा एव मध्यमानामकनिष्ठा सुप्रसारिता ॥

**पताका**

पताका तु समानामकनिष्ठाभ्यां समन्विता।
हासस्थानस्थिता चैव सा एव परिवर्तिता ॥

**वज्रकोशा**

प्रसारितसमाङ्गुष्ठस्थिता कुञ्चिततर्जनी।
सा एव वज्रकोशा तु मध्यमा मुखसन्धिता ॥

**चक्रा**

सा एव तु समानामकनिष्ठा चक्रसंज्ञिता।
निर्युक्ताङ्गुष्ठबन्धा तु प्रसारितमुखोत्थिता ॥

**वज्रमुष्टि**

वज्रबन्धस्त्वधोदानात् स्वाञ्जलिश्चोर्ध्वदायिका।
समाङ्गुष्ठनिपीडा च सुप्रसारितलेपना ॥
एकतर्जनिसंकोचा द्वयङ्गुष्ठग्रन्थिबन्धिता।
अङ्गुष्ठाग्रग्रकटा बन्धा वज्रमुष्ट्यग्रसन्धिता ॥

—सर्वतथागततत्त्वसंग्रह, पृ० 28

## वज्रसत्त्वकुल की समयमुद्राएँ

**सत्त्वोष्णीषा**

वज्रबन्धं दृढीकृत्य प्रविष्टाङ्गुष्ठसंचयम् ।
कुञ्चिताग्रयासु गच्छन्तं सत्त्वोष्णीषेति संज्ञिता ॥

**तेजोराशि**

वज्रबन्धं समादाय समाङ्गुष्ठात्ममध्यमा ।
तेजोराशीति विख्याता तेजोराशेर्महात्मनः ।'

**महाविद्योत्तमा**

वज्रमुद्राद्विकं बद्ध्वा कनिष्ठाङ्गुष्ठसन्धितम् ।
गाढमङ्कुशबन्धेन महाविद्योत्तमस्य तु ॥

**हृदया**

महाविद्योत्तममयीं मुद्रां बद्ध्वा सुयन्त्रिताम् ।
हृदयाङ्गुष्ठमुखानां तु बन्धनाद् हृदया स्मृता ।

**चतुःपुष्पा**

तामेवानाममध्याभिरङ्गुलीभिः सुयन्त्रिताम् ।
वज्ररत्नप्रयोगेण परिवर्त्य मुखस्थिताम् ॥
तामेवोत्तानसंस्थां स्वहृदये परिवर्त्यं वै ।
चतुःपुष्पा तु नामेन पद्मविद्योत्तमस्य तु ॥

**वज्रकर्मप्रसाधिका**

तामेव मूर्धादारभ्य भ्रमत्कायाग्रमण्डला ।
वज्रविश्वस्य मुद्रेयं वज्रकर्मप्रसाधिका ॥

**सर्वसाधिका**

सत्त्ववज्रां दृढीकृत्य कनिष्ठा वज्रसन्धिता ।
सर्वविद्धृदयस्यास्य मुद्रेयं सर्वसाधिका ॥

**वज्रशूला**

कनिष्ठाङ्गुष्ठबन्धे तु वाममध्याङ्गुलित्रिके ।
त्रिशूले मध्यशूलं तु वज्रमुद्रापरिग्रहम् ॥
वज्रविद्योत्तमस्येयं वज्रशूलेति कीर्तिता ।

—सर्वतथागततत्त्वसंग्रह, पृ० 94

## पद्मकुल की समयमुद्राएँ

**विश्वपद्मा**

वज्राञ्जलिं समाधाय सममध्योत्थिता तथा ।
कनिष्ठाङ्गुष्ठविकचा विश्वपद्मेति कीर्तिता ॥

**जटाबुद्धा**

सा एवाङ्गुष्ठपर्यङ्का कुञ्चिताग्राग्रयविग्रहा ।
मध्यवज्रजटामूर्ध्नि जटाबुद्धेति कीर्तिता ॥

**अमोघमुद्रा**

वज्रबन्धं दृढीकृत्य समाङ्गुष्ठमधस्तनम् ।
तर्जनीद्वयसंकोचा समुद्गता समाधितः ॥
समाञ्जलिं समाधाय तर्जनी वज्रपीडिता ।
विकसिताङ्गुष्ठमुखयोर्मुद्राऽमोघेश्वरस्य तु ॥

**पद्मबुद्धा**

वज्रबन्धं दृढीकृत्य समुत्तानं तु बन्धयेत् ।
समाङ्गुष्ठकृता पद्मे पद्मबुद्धेति कीर्तिता ॥

**साधुपद्मा**

अङ्गुष्ठवज्राग्राभ्यामङ्कुशं खड्गमेव च ।
अन्त्यद्वयविकासा च मध्यानामाग्रकुड्मला ॥
समाञ्जलिं समाधाय वलिताङ्गुष्ठकुञ्चिता ।
तर्जन्या तर्जनीं गृह्याकर्षयेत् पद्मबाणया ॥
समाञ्जलिं तथोत्तानां बन्धयेत् साधुमुद्रया ।
साधुकारं प्रददाति साधुपद्मेति कीर्तिता ॥

**पद्मभृकुटि**

समाञ्जलिं दृढीकृत्य कुञ्चिताग्रया मुखस्थिता ।
कनिष्ठाभ्यां तु विकचा पद्मभृकुटिरुच्यते ॥

**पद्मसूर्या**

वज्रबन्धं दृढीकृत्य हृदये तु प्रसारयेत् ।
पद्मसूर्येति विख्याता सर्वाङ्गुलिसुमण्डला ॥

**पद्मरत्नध्वजाग्री**

समाञ्जलिं दृढीकृत्य तर्जनीभ्यां मणीकृता।
पद्मरत्नध्वजाग्री तु मूर्ध्नि बाहुप्रसारिता॥

**पद्ममुष्टि**

वज्रमुष्टिं द्विधाकृत्य कुञ्चयित्वा तु मध्यमे।
स्वाङ्गुष्ठपृष्ठनिहिते पद्ममुष्टिरुदाहृता॥

**हयग्रीवा**

वज्रधातुप्रयोगेण वज्राञ्जलिसमुत्थिता।
सर्वपूजाग्र्यदेवीनां समयाग्र्यस्तु बन्धयेत्॥
वज्रबन्धं दृढीकृत्य सन्धयेत् तर्जनीद्वयम्।
संकोचात् पुरतः सन्धेद् हयग्रीवेति कीर्तिता॥

**अमोघपाशा**

पद्माञ्जलिं समाधाय तर्जनीग्रन्थिबन्धना।
अमोघपाशमुद्रेयं तर्जन्यङ्गुष्ठसङ्कुला॥

—सर्वतथागततत्त्वसंग्रह, पृ० 116,117

(पद्मकुल की गुह्यमहामुद्राओं के लिये उक्त ग्रन्थ के पृष्ठ 122-124 भी देखें)

## मणिकुल की समयमुद्राएँ

**सर्वार्थसिद्धिदा**

वज्रबन्धं दृढीकृत्य तर्जनीभ्यां मणीकृता।
प्रसारिताङ्गुष्ठमुखा हृदि सर्वार्थसिद्धिदा॥

**मणिरत्नप्रदा**

वज्रबन्धं समाधाय मध्यमा मणियोजिता।
मुद्रेयं मणिचिह्नस्य मणिरत्नप्रदायिका॥

**मणिरत्नाङ्कुशी**

सा एवाङ्कुशयोगेन तर्जनीभ्यां समिन्धिता।
सर्वार्थकर्षणी मुद्रा मणिरत्नाङ्कुशी स्मृता॥

**बाणाकर्षणी**

सा एव वलितां कृत्वा तर्जन्या तर्जनीग्रहा।
बाणाकर्षणयोगेन कर्षयन् रागयेज्जगत्॥

**साधुकारा**

सा एव साधुकारा तु तर्जन्यङ्गुष्ठयोजिता।
सा एवाङ्गुष्ठसन्धानसंच्छन्नाग्रयाङ्गुली तथा॥

**मणिवृष्टिः**

अङ्गुष्ठान्तरयोश्चैव पुनरग्रधा मुखे क्षणात्।
मणिदृष्टिस्तु सा ख्याता दृष्टयर्थानां प्रहारिका॥

**मणिकोशा**

मणिकोशा हरेदर्थान् जगतां विक्रमेण तु।
वज्रबन्धाग्रचक्रा च समाङ्गुष्ठप्रवेशिता॥

**मणिबन्धा**

मणिबन्धेति विख्याता रक्षाकवचिनी स्मृता।
सा एव सर्वसिद्धयर्था यक्षयोगा मुखस्थिता॥

**मणिदंष्ट्रा**

मणिदंष्ट्रेति विख्याता भयात् सर्वार्थहारिणी।
वज्रबन्धं दृढीकृत्य कुञ्चिताग्रया सुयन्त्रिता॥

**मणिमुष्टिः**

संगृह्याङ्गुष्ठयोः सम्यग् मणिमुष्टिस्तु सिद्धिता।
पूजाग्रसमयानां तु वज्रधातुप्रयोगतः॥

—सर्वतथागततत्त्वसंग्रह, पृ० 145-147

इन मुद्राओं में कामनाभेद से कुछ हेरफेर भी होते हैं, उन्हें उक्त ग्रन्थ में ही देखें।

———

# सर्वतथागततत्त्वसंग्रह : श्लोकार्धानुक्रमणी

—ठिनलेराम शाशनी—

[ 'धीः' के पिछले अंकों में अनुसन्धाताओं की सुविधा के लिये सेकोद्देशटीका, अद्वयवज्रसंग्रह, साधनमाला, कालचक्र आदि ग्रन्थों के परिशिष्टों का प्रकाशन किया गया था। अब इस अंक में सर्वतथागततत्त्वसंग्रह की श्लोकार्धानुक्रमणी दी जा रही है।

सर्वतथागततत्त्वसंग्रह का सम्पादन विस्तृत भूमिका सहित डा० लोकेशचन्द्र ने किया है तथा मोतीलाल बनारसीदास द्वारा सन् 1987 में प्रकाशित हुआ है। इस ग्रन्थ का अनुवाद चीनी तथा तिब्बती भाषाओं में हुआ है। बौद्ध तन्त्रों के चार विभागों में यह योगतन्त्र के अन्तर्गत है। यह योगतन्त्र का मूल ग्रन्थ है। इस ग्रन्थ के चार भाग हैं। प्रत्येक भाग को आश्रय करके आचार्यों ने टीका ग्रन्थों की रचना की है। इससे ऐसा जान पड़ता है कि प्रत्येक भाग अपने में पूर्ण है। आचार्य पद्मवज्र द्वारा रचित "तन्त्रार्थावतारव्याख्यान" (तो० 2502) नामक टीका ग्रन्थ में उन्होंने तत्त्वसंग्रह में वर्णित 37 तत्त्वों के नाम गिनाये हैं। इससे तत्त्वसंग्रह नाम की सार्थकता प्रतीत होती है। ]

## श्लोकार्धानुक्रमणी

—०—

# दुर्लभ ग्रन्थों की आधार सामग्री

—डॉ० ठाकुरसेन नेगी—

[ इस शीर्षक के अन्तर्गत 'धीः' के प्रथम आठ अंकों में लगभग 271 महत्त्वपूर्ण हस्तलिखित तन्त्र-ग्रन्थों की आधार सामग्री की सूचना दी जा चुकी थी, जो अब दुर्लभ ग्रन्थों की आधार सामग्री (प्रथम भाग) शीर्षक से ग्रन्थ रूप में प्रकाशित हो चुकी है। 'धीः' के नवें अंक में इस शीर्षक से ही अन्य 85 महत्त्वपूर्ण हस्तलिखित ग्रन्थों की आधार सामग्री की सूचना दी गई थी। संप्रति एशिया, यूरोप एवं अमेरिका के विभिन्न सुदूरवर्ती पुस्तक संग्रहों में संरक्षित लगभग 320 अन्य महत्त्वपूर्ण हस्तलिखित बौद्ध स्तोत्र-ग्रन्थों की आधार सामग्री प्रस्तुत है, जो 2-3 अंकों में पूरी होगी। ]

| Title | Author | Institution | Ms. No. |
| --- | --- | --- | --- |
| अचिन्त्यस्तव सटीक<br>Acintyastava Saṭika<br>No. 1128 (ka. 76b[7]-79a[2])<br>Bsam-gyis-mi-khyag-par-bstod-pa<br>A. klu-Sgrub<br>T. Tilaka, Pa-tshab ñi-ma-grags. | नागार्जुन<br>Nāgārjuna | BAK<br>SMTUL | Reel No. E 370/21<br>340-I-C |
| अम्बुधारास्तव<br>Ambudhārāstava | | BAK | 4/1033 |
| अरुणवरुणस्तोत्र<br>Aruṇavaruṇastotra | | MCBMBLJ | CH 122-G |
| अष्टमङ्गलगाथास्तोत्र<br>Aṣṭamaṅgala Gāthā Stotra | | ,,<br>,, | CH 214-B<br>DH 207 |
| अष्टमङ्गलस्तव<br>Aṣṭamaṅgalastava | | BAK<br>,, | 1/1696<br>4/2089 |
| अष्टमङ्गलस्तवस्तोत्र<br>Aṣṭamaṅgalastava Stotra | | MCBMBLJ | CH 199 |
| अष्टमहास्थानचैत्यवन्दनास्तोत्र<br>Aṣṭamahāsthānacaityavandanāstotra<br>No. 1168 [ka. 240b[5]-241a[5]]<br>Gnas Chen-Po brgyad-kyi mchod-rten-la Phyag-ḥtshal-bahi-bstod-pa.<br>Taisho No. 1684, Nj, No. 1071.<br>A. Śrīharṣadeva.<br>T. Śrī Jñānamitra, Yon-tan dpal. | | IASWR<br>NEPAL-II | MBB-II-135<br>P. 237 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | Dev. | 15 | Comp. | |
| Paper | | (17a4-33a2) | | with the Akāri-ṭikā |
| NP | N | 9-10 | | M. Film CIHTS |
| ,, | ,, | 34 | | |
| ,, | ,, | Folding Book | | |
| ,, | ,, | ,, | | |
| ,, | ,, | ,, | Comp. | |
| ,, | ,, | 3 (37-39) | | M. Film CIHTS |
| ,, | ,, | 4 (1b-4a) | | |
| ,, | ,, | 23 | ,, | M. Fische CIHTS |
| ,, | ,, | 13 | | |

| Title | Author | Institution | Ms. No. |
| --- | --- | --- | --- |
| अष्टमहाविद्यास्तोत्र Aṣṭamahāvidyāstotra | | RAK | 1/1697 $\frac{2}{14}$ |
| अष्टमातृकास्तुति Aṣṭamātṛkāstuti | | ,, | 4/346 |
| अष्टमातृकास्तोत्र Aṣṭamātṛkāstotra | | ,, | Reel No. H 381/11 |
| | | ,, | 3/360 |
| | | ,, | ,, |
| | | ,, | 3/589 |
| अष्टमातृकानवग्रहगणेशमहाकालमहाभैरवीस्तोत्र Aṣṭamātṛkānavagrahagaṇeśamahākālamahābhairavīstotra | | SMTUL | 386-11 |
| अष्टलोकपालस्तोत्र Aṣṭalokapālastotra | | RAK | 3/360 |
| | | ,, | 3/589 |
| अष्टविधिसत्वनामस्तोत्र Aṣṭavidhisattvanāmastotra | | ,, | Reel No. E 126/5 |
| अष्टश्मशानस्तोत्र Aṣṭaśmaśānastotra | | ,, | ,, ,, E 365/8 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| PL | Guptākṣara | 1 | Comp. | |
| NP | N | 66 | ,, | |
| ,, | Dev. | — | Incomp. | |
| ,, | ,, | (136a-136b) | Comp. | M. Film CIHTS |
| ,, | ,, | (143b-144a) | ,, | ,, ,, |
| ,, | | 257-258 | ,, | ,, ,, |
| IP | ,, | ($35a^1$-$40b^1$) | | |
| NP | ,, | 142b-143a | | M. Film CIHTS |
| ,, | N | 257a-257b | | ,, ,, |
| ,, | ,, | 4 | Comp. | |
| ,, | Dev. | 3 | ,, | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| अष्टसाहस्रिकाप्रज्ञापारमिता एकविंशतिस्तोत्र<br>Aṣṭasāhasrikāprajñāpāramitā Ekaviṁśatistotra | | MCBMBLJ | A 180 |
| आदिद्वादशकस्तोत्र<br>Ādidvādaśakastotra | | BAK | 3/360 |
| आर्यतारा अष्टोत्तरशतनामस्तोत्र<br>Āryatārā Aṣṭottaraśatanāmastotra | | ,, | Reel No. H 37/8 |
| | | ,, | 4/1616 |
| आर्यतारा एकविंशतिस्तोत्र<br>Āryatārā Ekaviṁśatistotra | | ,, | 5/128 |
| | | ,, | 5/128 |
| | | ,, | 5/128 |
| | | ,, | 5/128 |
| | | ,, | Reel No. E 193/16 |
| | | MCBMBLJ | CH 204 |
| | | ,, | CH 495-A |
| | | ,, | KA 16-S |
| | | ,, | DH 136 |
| आर्यतारा नमस्कारैकविंशतिस्तोत्र<br>Āryatārānamaskāraikaviṁśatistotra | | BAK | 5/131 |
| | | MCBMBLJ | CA 11-8 |
| | | ,, | CH 136 |
| | | ,, | CH 295 |
| | | ,, | CA 74-12 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | Dev. | 3 (1b-3b) | | |
| ,, | ,, | 2(10b-11b) | | M. Film CIHTS |
| ,, | ,, | 16 | Comp. | |
| ,, | Rañjanā | 6 | ,, | |
| ,, | N | Folding Book | ,, | |
| ,, | ,, | 24 | ,, | |
| ,, | ,, | 37 | ,, | |
| ,, | ,, | Folding Book | ,, | |
| ,, | ,, | 9 | ,, | |
| ,, | ,, | 27 | | |
| ,, | ,, | 17 | | |
| ,, | ,, | 7 (21b-27b) | | |
| ,, | ,, | 5 (9a-13b) | | |
| ,, | ,, | 9 | Comp. | |
| ,, | ,, | 3 (1b-3b) | ,, | NS 906 |
| ,, | ,, | 3 (1b-3b) | ,, | |
| ,, | ,, | 4 (1a-5a) | Incomp. | Missing F. 2. |
| ,, | ,, | 4 (1b-4b) | | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| आर्यतारास्तोत्र | | BAK | 3/360 |
| Āryatārāstotra | | ,, | 3/360 |
| No. 1693 (Śa. 49b⁶-51a⁵) | | ,, | 5/118 |
| Ḥphags-ma sgrol-ma-la bstod-pa | | ,, | Reel No. E 377/11 |
| A. N̄ima-sbas-pa. | | ,, | ,, E 127/29 |
| आर्यतारा बौद्धस्तोत्राणि | | ,, | 5 |
| Āryatārā Bauddha Stotrāṇi | | | |
| आर्यपद्मपाणिलोकेश्वर स्तोत्र | | ,, | 3/589 |
| Āryapadmapāṇilokeśvarastotra | | | |
| आर्यस्तव | | | |
| Āryastava | | ,, | Reel No. I. 45/1² |
| आर्यावलोकितेश्वर-अनन्तनागराजस्तवस्तोत्र | | MCBMBLJ | CH 130 |
| Āryāvalokiteśvara Anantanāgarāja- | | ,, | CH 214-0 |
| stavastotra | | ,, | CH 404 |
| | | SMTUL | 164-13 |
| | | ,, | 258-12 |
| | | ,, | 276-16 |
| | | CAMBRIDGE | 1332 |
| आर्यावलोकितेश्वरकरुणास्तवस्तोत्र | वन्घवाचार्य | SMTUL | 164-4 |
| Āryāvalokiteśvarakaruṇāstava- | Vandhavācārya | ,, | 276-24 |
| stotra | | CAMBRIDGE | 1333 |
| | | ,, | 1379 |
| | | MCBMBLJ | CH 20 |
| | | ,, | CH 26-B |
| | | ,, | CH 100-A |
| | | ,, | CH 229 |
| | | BAK | 4/1033 |
| | | ,, | 4/2089 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | Dev. | 42b | | M. Film CIHTS |
| ,, | ,, | (42b-43a) | | ,, ,, |
| ,, | N | 6 | Comp. | |
| ,, | Dev. | 20 | ,, | |
| ,, | N | 10 | ,, | |
| ,, | ,, | 24 | Comp. | |
| ,, | ,, | (255a) | | M. Film CIHTS |
| ,, | Dev. | 4 | Incomp. | |
| ,, | N | 40 | | |
| ,, | ,, | Folding Book | | NS. 962 |
| ,, | ,, | 30 | | |
| Paper | ,, | (19, 9-17) | | |
| ,, | ,, | (48, 3-50, 3) | | |
| ,, | ,, | (29, 5-31, 2) | | |
| ,, | | Folding Book | | |
| Paper | ,, | (7, 10-9, 16) | | |
| ,, | ,, | (78, 4-85, 1) | | |
| ,, | ,, | (48a-48b) | | A. D. 1797 |
| ,, | | (25 stanzas) ending | | |
| NP | ,, | 28 | Incomp. | With Newāri tran. |
| ,, | ,, | Folding Book | | NS. 823 |
| ,, | ,, | 34(1a-34b) | | |
| ,, | ,, | 82 | | |
| ,, | ,, | 3 (31-33) | | M. Film CIHTS |
| ,, | ,, | 5 (92-96) | | ,, ,, |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| आर्यावलोकितेश्वर-त्रिगुणात्मकस्तोत्र Āryāvalokiteśvaratriguṇātmaka-stotra. | जयप्रतापमल्ल Jayapratāpa-malla | MCBMBLJ | CH 214-J |
| | | ,, | DH 224 |
| | | BAK | 4/1033 |
| आर्यावलोकितेश्वरमणिकमालास्तोत्र Āryāvalokiteśvaramaṇikamālā-stotra | | ,, | 4/1033 |
| | | ,, | ,, |
| आर्यावलोकितेश्वर रक्षकस्तव Āryāvalokiteśvararakṣakastava | | MCBMBLJ | CH 226-B |
| | | ,, | |
| आर्यावलोकितेश्वररञ्जकास्तव Āryāvalokiteśvararañjakāstava | | SMTUL | 164-18 |
| आर्यावलोकितेश्वररत्नमालास्तवस्तोत्र Āryāvalokiteśvararatnamālāstava stotra | | MCBMBLJ | CH 183-C |
| | | ,, | CH 406 |
| | | SMTUL | 164-3 |
| | | ,, | 276-41 |
| | | BAK | 4/1033 |
| | | ,, | 4/2089 |
| आर्यावलोकितेश्वररूपस्तवस्तोत्र Āryāvalokiteśvararūpastavastotra | | MCBMBLJ | CH 100-B |
| | | SMTUL | 164-5 |
| | | ,, | 276-23 |
| | | CAMBRIDGE | 1322 |
| | | ,, | 1614 |
| | | BAK | 4/2089 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | N | Folding Book | | NS 962 |
| ,, | ,, | 98 | | |
| ,, | ,, | 4 (44-47) | | M. Film CIHTS |
| ,, | ,, | (12-14) | | ,, ,, |
| ,, | ,, | (55-57) | | ,, ,, |
| ,, | ,, | (69) | | 42 other stotras, |
| ,, | ,, | Folding Book | | |
| Paper | ,, | (22, 15-23, 15) | | |
| NP | ,, | Folding Book | | |
| ,, | ,, | 12 | | |
| ,, | ,, | (5, 4-7, 10) | | |
| ,, | ,, | (129, 2-135, 5) | | |
| ,, | ,, | 4 (35-38) | Incomp. | M. Film CIHTS |
| ,, | ,, | 5 (118-122) | | ,, ,, |
| ,, | ,, | 34 | | With Newari translation. NS. 946 |
| Paper | ,, | (9, 16-11, 14) | | |
| ,, | ,, | (73, 3-78, 4) | | |
| ,, | | Folding Book | | |
| ,, | | (6b) | | |
| NP | ,, | 4 (89-92) | | M. Film CIHTS |

| Title | Author | Institution | Ms. No. |
| --- | --- | --- | --- |
| आर्यावलोकितेश्वरवन्दनास्तव Āryāvalokiteśvaravandanāstava | | SMTUL<br>RAK | 164-16<br>4/1033 |
| आर्यावलोकितेश्वरवन्दनास्तोत्र Āryāvalokiteśvaravandanāstotra | | MCBMBLJ<br>RAK | CH 214-Q<br>4/2089 |
| आर्यावलोकितेश्वरवेदनास्तोत्र Āryāvalokiteśvaravedanāstotra | | MCBMBLJ | CH 214-L |
| आर्यावलोकितेश्वरसप्ताक्षरस्तोत्र Āryāvalokiteśvarasaptākṣarastotra | | SMTUL | 164-29 |
| आर्यावलोकितेश्वरस्तवराज Āryāvalokiteśvarastavarāja | | ,,<br>,,<br>RAK<br>RAS | 164-12<br>276-38<br>4/2089<br>30-III |
| आर्यावलोकितेश्वरस्तव Āryāvalokiteśvarastava | | RAK<br>,,<br>,, | 5/127<br>Reel No. E 374/15<br>4/1033 |
| आर्यावलोकितेश्वरस्तवस्तोत्र Āryāvalokiteśvarastavastotra | | SMTUL | 276-4 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | N | (21, 4-22, 7) | | |
| | | 2 (17-18) | | M. Film CIHTS |
| ,, | ,, | Folding Book | | NS 962 |
| ,, | ,, | 2 (123-124) | | M. Film CIHTS |
| ,, | ,, | Folding Book | | NS 962 |
| Paper | ,, | (44, 4-15) | | |
| ,, | ,, | (17, 19-19, 9) | | |
| ,, | ,, | (115, 5-119, 5) | | |
| NP | ,, | 2 (111-112) | | M. Film CIHTS |
| ,, | ,, | Folding Book | Comp. | |
| ,, | Dev. | 6 | ,, | |
| ,, | N | 2 (21-22) | | M. Film, CIHTS |
| ,, | ,, | (9, 2-11, 2) | | |

| Title | Author | Institution | MS. No. |
|---|---|---|---|
| आर्यावलोकितेश्वरस्तोत्र | | RAK | 1/1696 |
| Āryāvalokiteśvarastotra | | ,, | 1/1696 |
| | | ,, | Reel No. E 487/27 |
| | | ,, | ,, ,, E 259/21 |
| | | ,, | ,, ,, E 14/9 |
| | | ,, | 4/1616 |
| | | ,, | 3/360 |
| | यमराज | ,, | ,, |
| | Yamarāja | | |
| | वलिराज | ,, | ,, |
| | Valirājā | | |
| | महेश्वर | ,, | ,, |
| | Maheśvara | | |
| | उमादेवी | ,, | ,, |
| | Umādevi | ,, | 4/1033 |
| | वासुकिनाग | ,, | 4/2089 |
| | Vāsukināga | ,, | ,, |
| | अनन्तनाग | | |
| | Anantanāga | MCBMBLJ | CH 2 |
| | | , | CH 69 |
| | | ,, | CH 122-J |
| | | ,, | CH 221 |
| Peking Ed. No. 3546 | चरपतिपाद | SMTUL | 164-2 |
| No 2726 (Nu. $93b^5$-95 $a^2$) | Carapatipāda | | 276-22 |
| Ḥphags-pa spyan-ras-gzigs | ,, | CAMBRIDGE | 1332 |
| dbaṅ-phyug-la tsarpa-ṭis | ,, | ,, | 1614 |
| bstod-pa. | ,, | MCBMBLJ | CH 183-B |
| T. Śrīvanaratna, Chos-ḥkhor- | ,, | ,, | CH 18-B |
| lo-tsā-ba. | ,, | ,, | CH 26-C |
| R. Rgya-mtsho, | ,, | ,, | CH 266-B |
| | ,, | ,, | CH 236 |
| | ,, | ,, | CH 100-C |
| | ,, | RAK | 4/2089 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | N | Folding Book | | |
| ,, | ,, | ,, | | |
| ,, | ,, | 6 | Comp. | |
| ,, | ,, | 7 | ,, | |
| ,, | ,, | 8 | ,, | |
| PL | Rañjanā | 6 | ,, | |
| NP | Dev. | (22b-23a) | | M. Film CIHTS |
| ,, | ,, | (77a-78a) | | ,, ,, |
| ,, | ,, | (78a-78b) | | ,, ,, |
| ,, | ,, | 1 (78b) | | ,, ,, |
| ,, | ,, | 1 (79a) | | ,, ,, |
| ,, | N | 4 (47-50) | | ,, ,, |
| ,, | ,, | 2 (51-52) | | ,, ,, |
| ,, | ,, | (62a) | | ,, ,, |
| ,, | ,, | 22 | | |
| ,, | ,, | 98 | | |
| ,, | ,, | Folding Book | | |
| ,, | ,, | 60 | | |
| ,, | ,, | (3, 6-5, 4) | | |
| ,, | ,, | ([8]-73, 3) | | |
| Paper | | Folding Book | | |
| ,, | ,, | (1-3a) | | |
| NP | ,, | Folding Book | | |
| ,, | ,, | ,, 49 | | |
| ,, | ,, | ,, 44 | | |
| ,, | ,, | ,, 16 | | |
| ,, | ,, | ,, 20 | | |
| ,, | ,, | ,, | | |
| ,, | ,, | 4 (86-89) | | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| आर्यावलोकितेश्वरस्तोत्र | चन्द्रकान्तभिक्षुणी | MCBMBLJ | 183-D |
| Ārayāvalokiteśvarastotra | Candrakānta Bhikṣuṇī | SMTUL | 164-14 |
| | ,, | ,, | 276-30 |
| | ,, | BAK | 4/1033 |
| | वासुकिनागराज Vāsukināgarāja | SMTUL | 276-20 |
| | ,, | MCBMBLJ | CH 195-B |
| | श्रीवीरकुश Śrī Vīrakuśa | ,, | KA 16-R |
| आर्यावलोकितेश्वरस्वरूपस्तोत्र Āryāvalokiteśvarasvarūpastotra | | BAK | 4/1033 |
| उग्रतारास्तोत्रशतक Ugratārāstotraśataka | | ,, | 1/120 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | N | Folding Book | | |
| Paper | ,, | (19, 17-20, 15) | | |
| ,, | ,, | (95, 1-97, 1) | | |
| NP | ,, | 2 (5-6) | | M. Film CIHTS |
| Paper | ,, | (43, 5-45, 3) | | |
| NP | ,, | Folding Book | | |
| ,, | ,, | 11 (1b-11b) | | |
| ,, | ,, | (15a) | | M. Film CIHTS |
| ,, | ,, | 8 | | |

| Title | Author | Institution | Ms. No. |
| --- | --- | --- | --- |
| उग्रतारास्तोत्र Ugratārāstotra | | SMTUL | 418-70 |
| | | ,, | 420-V-5 |
| | | ,, | 201-40 |
| | | RAK | 3/360 |
| उग्रतारास्नानस्तोत्र Ugratārāsnānastotra | | ,, | 1/129 |
| उग्रवाराहीस्तव Ugravārāhistava | | ,, | 5/2001 |
| उमामहेशकृतस्तव Umāmaheśakṛtastava | | SMTUL | 202-88 |
| | | ,, | 418-36-a |
| एकजटिभट्टारिकानामस्तोत्र Ekajaṭi Bhaṭṭārikānāmastotra | | CAMBRIDGE | 1547 |
| | | SMTUL | 258-9 |
| | | MCBMBLJ | CH 188 |
| | | ,, | CH 122-k |
| | | RAK | 5/1696 |
| एकजटिस्तोत्र Ekajaṭistotra | | JBORS | XXXVI-163 |
| | | SMTUL | 420-IX-3 |
| | | RAK | 4/1033 |
| | | ,, | 1/799 |
| | | MCBMBLJ | CH 122-K |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| Paper | N | $(144a^3-145a^1)$ | | |
| ,, | ,, | $(9a^1-10a^1)$ | | |
| ,, | ,, | $(153a^6-154a^2)$ | | |
| NP | Dev. | (152b-154b) | | M. Film CIHTS |
| ,, | ,, | Folding Book | | |
| ,, | ,, | 6 | | |
| Paper | | $(403b^4-404a^2)$ | | |
| ,, | | $(86b^5-87a^4)$ | | |
| ,, | | 18 | | XVIIIth Cent. |
| ,, | | (41, 1-44, 4) | | |
| NP | N | 3(1b-3b) | | |
| ,, | ,, | Folding Book | | |
| ,, | ,, | ,, | | |
| Paper | Dev. | 6 | Comp. | |
| NP | N | $(3b^1-5b^2)$ | | |
| ,, | ,, | 12 | ,, | M. Film CIHTS |
| ,, | ,, | 18 | ,, | |
| ,, | ,, | Folding Book | | |

| Title | Author | Institution | MS. No. |
| --- | --- | --- | --- |
| एकजटाध्यानस्तोत्र<br>Ekajaṭādhyānastotra | | RAK | 3/360 |
| कथास्तोत्र<br>Kathā Stotra | | ,, | Reel No. H. 19/12 |
| कमलाकरसर्वतथागतस्तवस्तोत्र<br>Kamalākarasarvatathāgata-<br>stavastotra | | ,,<br>SMTUL<br>,, | 3/360<br>202-99<br>418-83 |
| कमलाकरसर्वतथागतस्तुति<br>Kamalākarasarvatathāgatastuti | | RAK | 3/589 |
| करवीरचण्डमहारोषणस्तोत्र<br>Karaviracaṇḍamahāroṣaṇastotra | | MCBMBLJ | DH 20 |
| करुणामयस्तोत्र<br>Karuṇāmayastotra | | RAK<br>,, | 1/1696<br>3/360 |
| कल्पान्तिकस्तोत्र<br>Kalpāntikastotra | | ,, | 4/2089 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | Dev. | (151b-152b) | | M. Film CIHTS |
| ,, | N | 6 | Comp. | |
| ,, | Dev. | (147b-150a) | | M. Film CIHTS |
| Paper | N | ($411b^{1}$-$413b^{6}$) | | |
| ,, | ,, | ($158b^{5}$-$161a^{4}$) | | |
| NP | ,, | (269-271) | | M. Film CIHTS |
| ,, | ,, | 4 (1b-4a) | | |
| ,, | ,, | Folding Book | | |
| ,, | Dev. | 133a | | M. Film CIHTS |
| ,, | N | 129a | Incomp. | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| कल्याणत्रिंशिकास्तोत्र<br>Kalyāṇatriṁśikāstotra | | BAK | 3/360 |
| कल्याणपञ्चविंशतिस्तोत्र<br>Kalyāṇapañcaviṁśatistotra | | ,, | 3/360 |
| काकपरीक्षा, श्वानपरीक्षा आदौ कर्मप्रशंसा दिव्यस्तोत्र<br>Kākaparīkṣā, Śvānaparīkṣā ādaukarmapraśaṁsā divyastotra | | MCBMBLJ | CH 521 |
| कायूत्तरस्तोत्र<br>Kāyūttarastotra | | BAK | 4/2089 |
| कालिकास्तव<br>Kālikāstava | | SMTUL | 418-139 |
| कालीस्तोत्र<br>Kālīstotra | | MCBMBLJ | KA 16-C |
| कुलिशेश्वरस्तोत्र (वज्रडाकार्णवतन्त्र)<br>Kuliśeśvarastotra<br>(Vajraḍākārṇavatantra) | | BAK<br>MCBMBLJ | 4/918<br>A 162 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
| --- | --- | --- | --- | --- |
| NP | Dev. | (32a-33a) | | M. Film CIHTS |
| ,, | ,, | (49b-52b) | | ,, ,, |
| ,, | N | 42 | | |
| ,, | | (49b) | | |
| Paper | | (248b4-249b5) | | |
| NP | | 3 (1b-3a) | | |
| ,, | ,, | 21 | Comp. | |
| ,, | ,, | 11 | Incomp. | (F. 1, 7, 8, 11, 13-18 & 21 only) |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| कोलमुखीयमहातन्त्रोक्त वज्रवाराहीद्वादशनामस्तोत्र चिन्तार्थदंश (योगसिद्धान्ततन्त्र) Kolamukhiyamahātantrokta Vajravārāhidvādaśanāma stotra Cintārthadaṁśa (Yogasiddhāntatantra) | | MCBMBLJ | A 91-1 |
| गणपतिस्तोत्र Gaṇapatistotra | | BAK | 4/2089 |
| | | SMTUL | 199-16 |
| | | CAMBRIDGE | 1679-II |
| गणपतिहृदयस्तोत्र Gaṇapatihṛdayastotra | | BAK | Reel No E 356/18 |
| गण्डीस्तव Gaṇḍistava | | ,, | 3/589 |
| गणेशस्तोत्र Gaṇeśastotra | | ,, | 3/360 |
| | | MCBMBLJ | KA 16-M |
| गीतस्तोत्रादिसंग्रह Gitastotrādisaṁgraha | | BAK | 3/659 |

